प्रियपरिरम्भणरभसवलितमिव पुलकितमतिदुरवापम् ।
मदुरसि कुचकलशं विनिवेशय शोषय मनसिजतापम् ॥ क्षण० ॥४॥
अधरसुधारसमुपनय भामिनि जीवय मृतमिव दासम् ।
त्वयि विनिहितमनसं विरहानलदग्धवपुषमविलासम् ॥ क्षण० ॥ ५ ॥

---

किमिव । वदनसुधानिधिरिव तस्माद्गलितममृतमिव । तव विरहेण तापिताहं कथं वदिष्यामीत्याशङ्क्याह—तत्र परस्परमुपमानोपमेयभावः । दुकूलमिव विरहमपनयामि विरहमिव दुकूलमपनयामि । किंभूतं दुकूलं । उरसि वर्तमानम् । पुनः किंभूतं दुकूलं । पयोधररोधकम् । विरहे हि पयोधरौ न वर्धेते । दुकूलमपि पयोधरावावृत्य तिष्ठति । अथवा पयोधरो मेघ एव रोधको यस्य विरहस्येति । मेघालोके प्रियः समेत्य विरहं रुणद्धीत्युक्तिलेशः ॥ ३ ॥ अपि च । प्रियेति । हे राधे, मदुरसि कुचकलशं विनिवेशय । अत एव मनसिजतापं शोषय । कलशे संनिहिते तापो यात्येव । किंभूतं कुचकलशम् । पुलकितं रोमाञ्चितम् । पुनः किंभूतम् । अतीव दुःखेनावाप्यते त्वदनुग्रहं विना । पुनः किंभूतम् । प्रियपरिरम्भणाय रभसेन औत्सुक्येन वलितं संभक्तमिव ॥ ४ ॥ अपि च । अधरेति । हे भामिनि प्रिये, चरणपरिचरणपरेऽपि कोपं मुञ्च । मानापनोदाय संबोध्यते । हे कोपने, अधरसुधारसमुपनय अर्पय । अधरवक्त्रसंयोगं कुरुष्वेत्यर्थः । मां दासं त्वदधरामृतपिपासुतया मृतमिव जीवयेत्यर्थः । अमृतपानं हि मृतं जीवयति । दासो हि अनुपेक्षणीयो भवति । किंभूतं माम् । त्वयि विनिहितमनसं आरोपितमानसम् । अत एव विरहानलेन दग्धं वपुर्यस्य ।

---

वचनं रचय । कीदृशम् । वदनमेव सुधानिधिश्चन्द्रस्तस्माद्गलितं च्युतम् । असत्यलपणवाक्यम् । अथ चाप्युरसि हृदये वर्तमानं दुकूलं पट्टवस्त्रमपनयामि । कीदृशम् । पयोधरयो रोधकं तिरोधायकम् । कमिव विरहमिव । यथा मद्विरहो मयापनीतस्तथा दुकूलमपनयामीत्यर्थः । विरहपक्षे पयोधररोधकं स्तनाश्लेषप्रतिरोधकम् ॥ ३ ॥ प्रियेति । हे राधे, मदुरसि कुचकलशं विनिवेशय अर्पय । कीदृशम् । अतिदुरवापमतिदुर्लभम् । पुनः कीदृशम् । पुलकितं रोमाञ्चितम् । अत्र हेतुमुत्प्रेक्षयति—प्रियपरिरम्भणरभसवलितमिव प्रियस्य परिरम्भणे आलिङ्गने यो रभस उत्साहस्तेन वलितमिव युक्तमिव । अपरोऽपि यो हर्षयुक्तो भवति तस्य रोमाञ्चो भवत्येवेति ध्वनितम् । तेनालिङ्गनेन मनसिजतापं कामजन्यं संतापं शोषय नाशय ॥ ४ ॥ अधरेति । हे भामिनि, अधरसुधारसमधरसंबन्ध्यमृतरसमुपनय वितर । दासं मादृशमनुगतं जीवय । कीदृशं मृतमिव । अन्योऽपि मृतोऽमृतपानेन जीवतीति ध्वनिः । मृतत्वे हेतुमाह—त्वयीति । त्वयि विनिहितमनसं त्वय्यर्पितचित्तम् । पुनः कीदृशम् । विरहानलेन त्वद्विरहरूपेणाग्निना दग्धं वपुर्यस्य तम् । अत एवाविलासं [illegible]

शशिमुखि मुखरय मणिरशनागुणमनुगुणकण्ठनिनादम् ।
श्रुतियुगले पिकरुतविकले मम शमय चिरादवसादम् ॥ क्षण० ॥ ६ ॥
मामतिविफलरुषा विकलीकृतमवलोकितमधुनेदम् ।
लज्जितमिव नयनं तव विरमति सृजसि वृथा रतिखेदम् ॥ क्षण० ॥ ७ ॥
श्रीजयदेवभणितमिदमनुपदनिगदितमधुरिपुमोदम् ।
जनयतु रसिकजनेषु मनोरमरतिरसभावविनोदम् ॥ क्षण० ॥ ८ ॥

---

अत एव च न विद्यन्ते विलासा यस्य ॥ ५ ॥ अपि च **शशिमुखेति** । हे शशिमुखि, मणिरशनागुणं मुखरय वाचालं कुरु । किंभूतं मणिरशनागुणम् । अनुगुणकण्ठनिनादम् । अनुगुणोऽनुरूपः अर्थादेव त्वदीयकण्ठस्य निनादो यस्य । अत एव मम श्रुतियुगले चिरात्त्वदसङ्गमावर्तमानमवसादं खेदं शमय । किंभूते श्रुतियुगले । तव विरहे पिकरुतेन विकलीकृते । विरहिणो हि पिकरुतं दुःश्रवं भवतीति ॥ ६ ॥ अपि च **मामिति** । हे राधे, इदं तव नयनमधुना अवलोकितम् । अर्थान्मां लज्जितमिव विरमति । किंभूतं नयनम् । मामभिलक्ष्य विफलम् । विफलरुषा निरर्थकरोषेण विकलीकृतम् । अविकलं विकलं कृतमिति विकलीकृतम् । अत एव वृथा रतिखेदं सृजसि । अथवा विसृजेति पाठान्तरम् । तत्र वृथा निरर्थकम् । विसृज मुञ्च ॥ ७ ॥ **श्रीजयदेवेति** । इदमनुपमो निगदितो मधुरिपोर्मोदो यत्र येन वा । रसिकजनेषु मनोरमो यो रतिरसो रतिरागस्तस्य भावस्तत्ता स्थैर्यं तस्य विनोदं कौतुकं जनयतु । किंभूतमिदं श्रीजयदेवभणितम् । 'पदानां दशकं यत्र ताले र्णयतौ भवेत् । ध्रुवः प्रतिपदं गेयः कविनामाङ्कितात्पदात् ॥ गीत्वालापान्यशब्दं प्रतिताले ततः परम् । पाटास्तेनाः स्वराश्चैव शृङ्गारो रस उत्तमः ॥ वशाखाभिधो रागः प्रबन्धे संप्रदृश्यते । श्रीविद्याधरलीलाख्यः श्रीपतिप्रीति-

---

५ ॥ **शशिमुखीति** । हे शशिमुखि चन्द्रवदने, मणिरशनागुणं मणियुक्तकाञ्चीदाम मुखरय सशब्दं कुरु । अनेन हंसलीलाख्यं विपरीतरतं भजस्वेति ध्वनितम् । तल्लक्षणं चोक्तं प्राक् । कीदृशं रशनागुणम् । अनुगुणं कण्ठनिनादः कण्ठशब्दो यस्य तादृशम् । रशनागुणानुकारिकण्ठशब्दं च कुर्वित्यर्थः । अनेन शब्देन मम श्रुतियुगले कर्णयुग्मे चिरादवसादं चिरकालीनमुपतापं शमय नाशय । कीदृशे । पिकरुतेन कोकिलशब्देन विकले दुःखिते ॥ ६ ॥ **मामिति** । हे राधे, मामवलोकयितुं तव नयनं प्रति मुद्रां प्राप्नोति । किमिव । लज्जितमिव । मां कीदृशम् । अतिविफलरुषा अतिविफलेन रोषेण विफलीकृतं विफलतां नीतम् । अधुनेदानीं नयनमीलने विरम विरक्ता भव । निष्फलरोषादित्यर्थात् ॥ ७ ॥ **श्रीजयदेवेति** । इदं श्रीजयदेवभणितं जयदेवेन कृतं रसिकजनेषु मनोरमरतिरसभावविनोदं रतिः भोगः रसः शृङ्गाररसो भावाः व्यभिचारिसात्त्विकादयस्तेषां मनोरमं विनोदं कौतुकं जनयतु । कीदृशं भणितम् ।

---

प्रत्यूहः पुलकाङ्कुरेण निबिडाश्लेषे निमेषेण च
क्रीडाकूतविलोकितेऽधरसुधापाने कथानर्मभिः ।
आनन्दाधिगमेन मन्मथकलायुद्धेऽपि यस्मिन्नभू-
दुद्भूतः स तयोर्बभूव सुरतारम्भः प्रियंभावुकः ॥ २ ॥
दोर्भ्यां संयमितः पयोधरभरेणापीडितः पाणिजै-
राविद्धो दशनैः क्षताधरपुटः श्रोणीतटेनाहतः ।

---

कारकः ॥' इति मधुरिपुमोदविद्याधरलीला नाम त्रयोविंशः प्रबन्धः ॥ ८ ॥
इदानीं सुरतारम्भं विवर्णयिषुराह—प्रत्यूह इति । तयो राधामाधवयोः स चिरं काङ्क्षितः सुरतारम्भ उद्भूतः प्रवृद्धः सन् प्रियंभावुको बभूव । स कः । यस्मिन्सुरतारम्भे निबिडाश्लेषे दृढतरालिङ्गने पुलकाङ्कुरेण रोमाञ्चमात्रेणापि प्रत्यूहोऽभूत् । अङ्कुरग्रहणं तन्मात्रमपि आलिङ्गनान्तरायज्ञापनार्थम् । आश्लेषारम्भेऽपि सात्त्विको रोमाञ्चोऽभूदिति युज्यते । अपि च यस्मिन्क्रीडाकूतविलोकितेऽपि निमेषेण प्रत्यूहोऽभूत् । विलोकितं निमेषितमात्रस्याप्यसहमभूत् । अनु च अङ्गादङ्गान्तरसौन्दर्यदिदृक्षालोलं नेत्रं नैकत्राप्यवयवे धृतिं बधानेति व्यज्यते । अधरसुधापाने कामकथाक्रीडनमन्तरायो जातः अधरपाने प्रियालापो न सोढः अतिशयेनाधरं पातुमिच्छोरतिप्रियालापः कोऽपि तस्मादप्यधिकरुचिर इति व्यज्यते । अपि च कामकलासु युद्ध इव युद्धे करणात्करणान्तरारम्भे आनन्दाधिगमेनापि अन्तरायो यथा कामजननाकाङ्क्षापि शिथिला भवेदिति वाच्यार्थः । कामोत्पत्तौ संजायमानायामल्पमनस्कत्वाय तत्प्रतिबन्धककारणान्तरमारब्धमिति व्यङ्ग्योऽर्थः । अत एव प्रवृद्धत्वमुचितम् । शार्दूलविक्रीडितं वृत्तम् । यथासंख्यमलंकारः । संभोगाख्यः शृङ्गारो रसः 'जयमङ्गलतालेन पद्यं शृङ्गारनिर्भरम् । गीताः पाटाः स्वरास्तेना उच्यन्ते यत्र रूपके ॥ देवशाखाभिधे रागे सुरतारम्भनामतः । चन्द्रहासप्रबन्धोऽयं प्रबन्धः प्रीतिकृद्धरेः ॥' इति सुरतारम्भचन्द्रहासनामा चतुर्विंशः प्रबन्धः ॥२॥ तदेव विवृणोति—दोर्भ्यामिति । यद्यस्मात्कारणादेतावत्यपि व्यतिकरे कान्तः कृष्णः कामपि वाचामगोचरे वर्तमानां तृ-

---

अनुपदं निगदितो मधुरिपोः कृष्णस्य मोद आनन्दो यत्र तादृशम् ॥ ८ ॥ प्रत्यूह इति । तयो राधामाधवयोः लोकोत्तरो ललितारम्भो ललितो मनोहर आरम्भो यस्यैतादृशः शृङ्गारक्रीडाविशेष उद्भूत उद्भटः प्रियंभावुको बभूव प्रियो बभूव । स क इत्यत आह—प्रत्यूह इत्यादि । यस्मिँल्ललितारम्भे निबिडाश्लेषे कर्तव्ये पुलकाङ्कुरेण रोमाञ्चोद्गमेन प्रत्यूहो विघ्नोऽभूत् । अथ च क्रीडाकूतविलोकिते क्रीडासु यदाकूतपूर्वकमभिप्रायपूर्वकं विलोकितं तत्र निमेषेण नेत्रस्पन्दनेन प्रत्यूहोऽभूत् । अथ च अधरसुधापानेऽधरामृतपाने कर्तव्ये कथानर्मभिः रहःकथाकौतुकैः प्रत्यूहोऽभूत् । अथ च मन्मथयुद्धे सुरते आनन्दाधिगमेन आनन्दप्राप्त्या प्रत्यूहोऽभूत् ॥ २ ॥ दोर्भ्यामिति । दोर्भ्यां बाहुभ्यामर्थाद्राधया संयमितो बद्धः । अथ च तथैव पयोधरभरेण पीडितः । अथ च

---

१ 'कथाकेलिभिः' इति पाठः ।

हस्तेनानमितः कचेऽधरमधुस्यन्देन संमोहितः

कान्तः कामपि तृप्तिमाप तदहो कामस्य वामा गतिः ॥३॥

वामाङ्के रतिकेलिसंकुलरणारम्भे तया साहस-

प्रायं कान्तजयाय किंचिदुपरि प्रारम्भि यत्संभ्रमात् ।

---

प्तिमाप तत्तस्मादहो कामस्य वामा लोकपथातीता गतिश्चेष्टितम् । अत्र कमितुमिष्ट इति कान्तशब्द औचितीमावहति । यतो दुःखबद्धवने प्रीतिमापेति । किंभूतः कान्तः । दोर्भ्यां संयमितो बन्धनं प्रापितः । अनु च पयोधरभरेणापीडितः आ सामस्त्येन पीडामापितः । अनु च पाणिजैर्नखैराविद्धः । अनु च दशनैश्च क्षतमधरपुटं यस्य । तथा श्रोणीतटेनाहतस्ताडितः । अपि च कचे हस्तेन गृहीत्वानमितः । अपि च अधरमधुस्यन्देनाधरमधुपानेन निमित्तेन संमोहनं प्रापितः । अहो इत्याश्चर्ये । कामस्य वामा गतिः । वामत्वं रसान्तराविर्भावात् । वीररसमाश्रित्य कृतापराधः स क्रमेण संयमनापीडनावेधक्षताहत्यवनमनसंमोहनानि प्रापितः कामपि तृप्तिमाप । अपि तु स्थिरोत्साहः सन् कामयुद्धान्न विररामेति न कामपीत्यर्थः । अतो वामा गतिः । अत्र विरोधः । यस्तु कमितुमिष्टः तस्मिन्कथं संयमनादयो योज्यन्ते । संयमनादिभिश्च श्रृङ्गारानुभावेष्वालिङ्गनादिषु द्योतितेषु कामपि निरतिशयां प्रीतिमापेति विरोधपरिहारः । अथवा कामस्य वामा इति वामैव गतिः वामानिष्टैव गतिः । यदेवं व्यतिकरेऽप्युद्रिक्तो भवति । शार्दूलविक्रीडितम् । अत्र वाक्यार्थस्य प्राधान्याद्रसस्य च संकीर्णत्वेनाङ्गत्वाद्रसवदलंकारता ॥ 'विजयानन्दतालेन गौडीरागे विरच्यते । पद्यं पाटाः खरास्तेना लीला नायकसंभवाः ॥ श्रृङ्गारकैशिकीरीतिः कामतृप्तिपुरःसरः । कामिनीहासनामायं प्रबन्धः परिकीर्तितः ॥' इति कामतृप्तिकामिनीहासनामा पञ्चविंशतितमः प्रबन्धः ॥ ६ ॥ यदुक्तं तदेव वीरसंवलितं श्रृङ्गारं विवृण्वन्नाह—**वामाङ्क इति ।** अयं श्लोकः पूर्ववाक्यशेषत्वेन योजनीयः । तदेत्यन्वयः । रतिकेलिसंकुलरणारम्भे वामाङ्गे वर्तमानया राधया संभ्रमात्स्मरसमराभिनिवेशात्संयमनादिभ्य उपरि कान्तजयाय यत्किंचित्समरसंपल्लम्पटभटयोग्यसाहसप्रायं बालाजनायोग्यं प्रारम्भि येन जघनस्थली निष्पन्दा इति चलितुमशक्तिः । अपि च दोर्वल्लिः शिथिलिता इति प्रहा-

---

तया पाणिजैर्नखैराविद्धस्ताडितः । अथ च तया दशनैः क्षताधरपुटः क्षतो दष्टोऽधरपुटो यस्य तादृशः कृतः । अथ च तया श्रोणितटेन नितम्बेनाहत आस्फालितः । अथ च तया हस्तेनानमितः कचे केशे धृत्वेत्यर्थात् । ततोऽधरमधुस्यन्दनेन संमोहितः । एवंविशिष्टोऽपि कान्तः कामप्यनिर्वचनीयां तृप्तिमाप प्राप । तदहो इत्याश्चर्ये । कामस्य वामा विरुद्धा गतिः । यस्य बन्धनादि क्रियते स प्रीतिं न प्राप्नोति । अयं तु तादृशोऽपि प्रीतिमाप । कामस्य विरुद्धैव रीतिरिति भावः ॥ ३ ॥ **माराङ्क इत्यादि ।** माराङ्के मारस्य चिह्ने । युद्धपक्षे मारस्याङ्के चिह्ने रतिकेलिसंकुलरणारम्भे रतिकेलिभिश्चुम्बनालिङ्गननानाबन्धादिरूपाभिः संकुले व्याप्ते रणारम्भे कामयुद्धारम्भे तया राधया साह-

---

१ 'माराङ्के' इति पाठः ।

निष्पन्दा जघनस्थली शिथिलिता दोर्वल्लिरुत्कम्पितं
वक्षो मीलितमक्षि पौरुषरसः स्त्रीणां कुतः सिध्यति ॥४॥
तस्याः पाटलपाणिजाङ्कितमुरो निद्राकषाये दृशौ
निर्धौतोऽधरशोणिमा विलुलितस्रस्तस्रजो मूर्धजाः ।
काञ्चीदाम दरश्लथाञ्चलमिति प्रातर्निखातैर्दृशो-
रेभिः कामशरैस्तदद्भुतमभूत्पत्युर्मनः कीलितम् ॥ ५ ॥

---

राक्षमता । अपि च वक्ष उत्कम्पितं हृदि कम्पो जातः । अपि च । अक्षि मीलितं दर्शनेऽशक्तं जातम् । अत्रार्थे वृद्धसंमतिमाह—स्त्रीणामबलानां पौरुषरसो वीररसः कुतः सिध्यति । अपि तु न कुतोऽपि । केलौ वामाङ्के ललनाया दक्षिणाङ्गस्थपुंसः भाजुनाडीसंबन्धात्सुरतान्तकारी कामोद्भवो भवतीति वात्स्यायनमतवेदिनां मतम् । तस्मिंश्च ललनानामेवं चेष्टाः प्रसिद्धाः । अथवा रतारम्भादुपरि इति योजना । इदमेव वाक्यं निरपेक्षं व्याख्येयम् । अत्र दोष्णोर्वल्लित्वेन विशेषणं शैथिल्येन औचितीमावहति । अत्र 'विशेषोक्तिरखण्डेषु कारणेष्वफलावचः ।' इति विशेषोक्तिरलंकारः । संभोगाख्यः शृङ्गारो रसः । कुतः सिध्यतीत्यनेन समरसकरणं व्यज्यते । गीत्यादि प्रसिद्धम् । 'जयश्रीसंज्ञतालेन पद्यं पाटाः स्वरास्तथा । स्तेनाश्च यत्र बध्यन्ते संभोगे रस उत्तमे ॥ रागे कर्पटबङ्गाले स पौरुषरसात्परः । प्रेम्णा विलासनामायं प्रबन्धो माधवप्रियः ॥' इति पौरुषरसप्रेमविलासनामा षड्विंशः प्रबन्धः ॥ ४ ॥ इदानीं संभोगसंतुष्ट्याऽऽसर्गसमाप्ते संभोगान्ते लीलामाह—**तस्या इति** । एभिः पञ्चभिः कामशरैः पत्युः श्रीकृष्णस्य मनः कीलितम् । तदेतदद्भुतमाश्चर्यकारि अभूत् । किंभूतैः कामशरैः । इत्यनेन प्रकारेण प्रातर्दृशोर्निमित्तैः खातैः । बाणास्तु

---

सप्रायं साहसबहुलं कान्तजयाय तदुपरि तस्य कान्तस्योपरि किंचिल्लोकोत्तरं प्रारम्भि पुरुषायितमारब्धम् । यत्संभ्रमात्संवेगात्तस्या राधिकाया जघनस्थली निष्पन्दा निश्चला जाता । दोर्वल्लिर्बाहुलता शिथिलिता शिथिलीभूता । वक्षो हृदयमुत्कम्पितम् । अक्षि मुद्रितम् । ततः स्त्रीणां पौरुषरसः पराक्रमाभिलाषः कथं सिध्यति । अपि तु न सिध्यत्येवेत्यर्थः । 'मारो मृतौ विषेऽनङ्गे' इति विश्वः । 'समौ संवेगसंभ्रमौ' इत्यमरः ॥ ४ ॥ **तस्या इति** । एतैः कामशरैः पत्युर्दृशोर्लोचनयोः प्रातर्निखातैर्मनः कीलितं विद्धम् । इत्यद्भुतमाश्चर्यम् । अन्यत्र निखातैर्बाणैरन्यत्कीलितमित्याश्चर्यमित्यर्थः । कैः । कामशरैः । तस्या राधायाः पाटलेन श्वेतरक्तेन पाणिजेन नखेनाङ्कितमुरः । निद्राकषाये निद्रया

---

१ 'निर्धूतोऽधर' इति पाठः । २ अस्याग्रे कश्चिदादर्शपुस्तकेषु निम्नलिखितः श्लोकः समुपलभ्यते—

'त्वामप्राप्य मयि स्वयंवरपरां क्षीरोदतीरोदरे
शङ्के सुन्दरि कालकूटमपिबन्मूढो मृडानीपतिः ।
इत्थं पूर्वकथाभिरन्यमनसो निक्षिप्य वामाञ्चलं
राधायाः स्तनकोरकोपरि चलन्नेत्रो हरिः पातु वः ॥'

व्याकोशः[1] केशपाशस्तरलितमलकैः स्वेद[2]मोक्षौ कपोलौ

क्लिष्टा[3] बिम्बाधरश्रीः कुचकलशरुचा हारिता हारयष्टिः ।

काञ्ची[4]कान्तिर्हताशा स्तनजघनपदं पाणिनाच्छाद्य सद्यः

पश्यन्ती[5] सत्रपा सा तदपि विलुलिता मुग्ध[6]कान्तिर्धिनोति ॥६॥

---

दृशोर्लेमास्तैर्विद्धं मन इत्येतदद्भुतम् । कोऽर्थः । प्रातः प्रियायामेतानि दृष्ट्वा पुनर्नव इव कामः संजात इत्यर्थः । तान्येव च कामबाणपञ्चकव्याजेन वस्तून्युपदिशति । तस्या राधाया उरो हृदयं पाटला ये पाणिजास्तैरङ्कितं दृष्ट्वा । अनेन पाटलापुष्पं स्मरबाण उक्तः । अपि च निद्रया कषाये कलुषिते दृशौ दृष्ट्वा । अनेन कमलाख्यः पुष्पबाणोऽभाणि । अपि च निर्धौतोऽधरशोणिमा । तं दृष्ट्वा । अनेन बन्धुजीवपुष्पं स्मरशरोऽगादि । अपि च विलुलितस्रस्तस्रजो मूर्धजाः । तानपि दृष्ट्वा स्रस्ता स्रग्येभ्यस्ते तथा । विलुलिताश्च ते स्रस्तस्रजश्च । अनेन मालतीदाम मीनकेतनेषुरुद्दिष्टः । अपि च दलश्लथाञ्चलमीषच्छ्लथप्रान्तं काञ्चीदाम मेखलादाम दृष्ट्वा । अनेन सुवर्णजात्यादिपीतकुसुमैः कुसुमास्त्रशरो वर्णितः । एतानि दृष्ट्वा पुनः स्मरपरवशो जात इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । अत्रापि वाक्यस्यान्यपरत्वाद्रसवदलंकारता । रसाश्चाद्भुतोपबृंहितः शृङ्गार एव । 'यतितालेन तालेन पद्यं पाटस्वरास्तथा । स्तेनास्तदन्त आलापः शृङ्गारः प्रेमनिर्भरः ॥ रागो मरुकृतिर्यत्र स प्रबन्धो निगद्यते । कामाद्भुताभिनवत्ता मृगाङ्कलेखाभिधानतः । (?) ॥' इति कामाद्भुताभिनवमृगाङ्कलेखाभिधः सप्तविंशः प्रबन्धः ॥ ५ ॥ व्याकोश इति । सा मुग्धकान्तिर्यत एव विलुलिता रतिपरिमर्दिता तथापि कृष्णं धिनोति प्रीणयति । किं कुर्वती । सत्रपा सती सद्यस्तत्कालं स्तनजघनपदं पाणिना आच्छाद्य पश्यन्ती । कथं विलुलितेत्याह— केशपाशः कबरीव्याकोशः शिथिलो जातः । अपि च अलकैश्चूर्णकुन्तलैस्तरलितमितस्ततो गतम् । कपोलौ स्वेदमोक्षौ जातौ । अनु च बिम्बाधरकान्तिः क्लिष्टा जाता । अनु च हारयष्टिः कुचकलशरुचा हारिता कुतोऽपि नाशिता । अनेन कञ्चुकाभावाद्धारयष्टिः शरीरशोभयैव निगीर्णा । अपि च काञ्चीकान्तिर्हताशा जाता । इयमपि वस्त्राभावात्तद्देशशोभयैव लुप्ता । निरलंकरणापि सर्वातिशायिन्या शरीरशोभयैव पत्यु-

---

कषाये ते दृशौ लोचने वा । निर्धौताधरशोणिमा निर्धौतश्चुम्बनादिना क्षालितो योऽधरस्य शोणिमा लौहित्यम् । मूर्धजाः केशाश्च कीदृशाः । विलुलितस्रजो विलुलिताः केशग्रहणपूर्वकचुम्बनादिदानेन म्लानाः । अत एव स्रस्ताः शिथिलाः स्रजः पुष्पमालाः येषु तादृशाः । काञ्चीदाम च मेखलासूत्रं च दरश्लथाञ्चलं दरमीषच्छ्लथं शिथिलमञ्चलं नवप्रान्तं च ॥ ५ ॥ (अत्र 'व्याकोश' इत्यादि तथा 'ईषन्मीलित' इत्यादि श्लोका

---

१ 'व्यालोलः' इति पाठः । २ 'स्वेदलोलौ' इति पाठः । ३ 'सान्द्रदृष्टाध-रश्रीः' इति पाठः । ४ 'काञ्ची काचिद्गताशा स्तन' इति पाठः । ५ 'पश्यन्ती चात्म-रूपं तदपि' इति पाठः । ६ 'विलुलितसरधेयं धिनोति' इति पाठः ।

ईषन्मीलितदृष्टि मुग्धविलसत्सीत्कारधारावशा-
दव्यक्ताकुलकेलिकाकुविकसद्दन्तांशुधौताधरम् ।
शान्तस्तब्धपयोधरं भृशपरिष्वङ्गात्कुरङ्गीदृशो
हर्षोत्कर्षविमुक्तिनिःसहतनोर्धन्यो धयत्याननम् ॥ ७ ॥
अथ सहसा सुप्रीतं सुरतान्ते सा नितान्तखिन्नाङ्गी ।
राधा जगाद सादरमिदमानन्देन गोविन्दम् ॥ ८ ॥

---

मनोहारिण्यभूदित्यर्थः । स्रग्धरावृत्तम् । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' ॥ ६ ॥ इदानीमन्यापदेशेनात्मानं धन्यमिति ध्वनयति—**ईषन्मीलितेति** । हर्षोत्कर्षविमुक्तनिःसहतनोः हर्षोत्कर्षेण नानारतजनितानन्दातिशयेन विमुक्ताश्लेषत्वेन निर्व्यापारा निःसहा च कामावेशवशादन्यव्यापारासहा तनुर्यस्याः । एतावता सुरतमनुश्रान्ततनोर्मृगलोचनाया धन्य एव मुखं धयति पिबति नाकृतपुण्यकर्मा । कथं यथा स्यात् । भृशपरिष्वङ्गाद्दृढालिङ्गनाच्छान्तस्तब्धपयोधरं शान्तौ विपुलकौ स्तब्धौ कठिनौ किंचिदानतौ पयोधरौ यस्मिन्कर्मणि तद्यथा स्यात् । एतावता सुरतान्ते नितान्तं कान्तं तन्मुखं दृष्ट्वा पुनरालिङ्ग्याधरपाने स्पृहाभवदित्यर्थः । किंभूतमाननम् । ईषन्मीलितदृष्टि किंचिन्मुकुलिते दृष्टी यत्र । किंभूतमाननम् । मुग्धं मनोहरं यथा स्यात्तथा विलसन्त्यो याः सीत्कृतानां धाराः श्रेणयस्तद्वशादव्यक्ता आकुलाश्च सुरतक्रीडायां या काकवो ध्वनिविकारास्तासु विकसन्तो ये दन्तांशवस्तैर्धौतोऽधरो यत्र तत्तथा । कस्मात् । दृढालिङ्गनवशात् । एतेन वृक्षाधिरूढकमित्यालिङ्गनमुक्तम् । तल्लक्षणम्—'चरणेन चरणमाक्रम्य द्वितीयेनोरुदेशमाक्रमन्ती वेष्टयन्ती च तत्पृष्ठासक्तैकबाहुर्द्वितीयेनांसमवनमयन्ती ईषत्प्रवृत्तान्तःश्वसितसीत्कृतकूजिता चुम्बनार्थमधिरोढुमिच्छेदिति वृक्षाधिरूढकम्' । तच्च घटितमिति चुम्बनविशेषः । 'ईषत्प्रगृह्य निमीलितनयनावाच्छादयन्तीति घट्टितं नाम' । एतच्च तदालिङ्गनतोषेण आत्मनि धन्यत्वमारोप्य स्वात्मगतार्थचिन्तनपरं पद्यम् । शार्दूलविक्रीडितं वृत्तम् । जातिरलंकारः । पाञ्चाली रीतिः । मागधी गीतिः । भारती वृत्तिः । स्थितलयं गानम् ॥ ७ ॥ अथानन्तरं तयोः परस्परानन्दसंदोहरूपसुरतावसाने राधा गोविन्दमानन्दयतीत्युत्तरकृत्यानि प्रति प्रोत्साहयन्ती जगाद—**अथ सहसेति** । अथ राधा आनन्देनोपलक्षितं गोविन्दमिदं वक्ष्यमाणं सादरं जगाद । किंभूतं गोविन्दम् । सहसा वेगेन

---

द्वयस्य टीका नोपलब्धादर्शपुस्तके ॥ ६ ॥ ७) अथेति । अथानन्तरं राधा कान्तं कृष्णं मण्डनवाञ्छया निजगाद । कीदृशं कान्तम् । रतिश्रान्तमपि रतिखिन्नचित्तमपि ।

---

१ 'मुग्धहसितं सीत्कार' इति पाठः । २ 'श्वासोत्कम्पिपयोधरोपरि परिष्वङ्गात्' इति पाठः । ३ शंकरमिश्रकृतरसिकमञ्जरीटीकायामस्या आर्यायाः स्थाने निम्नलिखितः श्लोको वर्तते—

'अथ निर्गतबाधा सा राधा स्वाधीनभर्तृका ।
निजगाद रतिश्रान्तं कान्तं मण्डनवाञ्छया ॥' इति ।

**रामकरीरागयतितालाभ्यां गीयते । प्र० ॥ २४ ॥**

**कुरु यदुनन्दन चन्दनशिशिरतरेण करेण पयोधरे ।**
**मृगमदपत्रकमत्र मनोभवमङ्गलकलशसहोदरे ॥ १ ॥**
**निजगाद सा यदुनन्दने क्रीडति हृदयानन्दने ॥ ध्रुवम् ॥**
**अलिकुलगञ्जनमञ्जनकं रतिनायकसायकमोचने ।**
**त्वदधरचुम्बनलम्बितकज्जल उज्ज्वलय[२] प्रिय लोचने । निज० २**

---

सुप्रीतम् । प्रीतिपरे हि नाथे विज्ञप्तिः सिद्धिमेतीति नीतिविदः । अथ सह हासेन वर्तेत इति राधाविशेषणमानन्देति वचने हेतुः । किंलक्षणा राधा । संभोगावसाने नितान्तमतिशयेन खेदं प्राप्तमङ्गं यस्याः सा तथा । इदं पथ्या आर्या छन्दः ॥ ८ ॥ अत्रान्वयसौकर्यार्थं पूर्वं ध्रुवपदं व्याक्रियते—**निजगादेति** । सा राधा वक्ष्यमाणं प्रोवाच । क सति । यदुनन्दने क्रीडां कुर्वति सति । किंभूते । हृदयानन्दकारिणि इति ध्रुवः ॥ अथ पदानि । **कुरु यद्विति** । हे यदुनन्दन, अत्र स्तनकलशे चन्दनवच्छीतलतरेण करेण कस्तूरिकया पत्रावल्यादि रचय । किंभूते कुचकलशे । कामस्य जगज्जयार्थमङ्गलकलशसदृशे । मङ्गलार्थंकलशो हि पयःपूर्णो भवति सुनीलाम्रपल्लवैरुपचितश्च । एवमत्र पयोधरस्यौचिती । अनेन मयूरपदकं नाम नखरक्षतं व्यज्यते । यथा चाह वात्स्यायनः—'नान्यत्पटुतरं किंचिद्रागस्यास्ति विवर्धनम् । नखदन्तसमुत्थानां कर्मणां गतयो यथा ॥' इति ॥१॥ अपि च । **अलिकुलेति** । हे प्रिय, लोचने पुनर्नूतनकज्जललेखां कुरु । किंभूतमञ्जनकम् । भ्रमरसमूहस्य तिरस्कारकम् । किंभूते लोचने । कामबाणानां मोचने इति कटाक्षविक्षेपैरुपलक्षिते । पुनः किंभूते । त्वदधरचुम्बनेन लम्बितं प्रसृतं कज्जलं यत्र । अनेन रागसंधुक्षणार्थं नयनयोश्चुम्बनमुक्तम् ॥२॥

---

कीदृशी राधा । निर्गता बाधा पीडा यस्याः सा । पुनः कीदृशी । स्वाधीनभर्तृका । तल्लक्षणं शृङ्गारतिलके—'यस्या रतिगुणाकृष्टः पतिः पार्श्वं न मुञ्चति । विचित्रविभ्रमासक्ता स्वाधीनपतिका यथा ॥' इति ॥ ८ ॥ तदेव गीतेन कथयति—**कुर्वित्यादि** । गीतस्यास्य रामकरीरागो यतितालः । गीतार्थस्तु सा राधा यदुनन्दने निजगाद उक्तवती । कीदृशे यदुनन्दने । क्रीडति । पुनः कीदृशे । हृदयानन्दजनके । किं निजगादेत्याह—**कुर्विति** । हे यदुनन्दन कृष्ण, अत्र मृष्टाङ्गरागे मम पयोधरे स्तने करेण मृगमदपत्रकं कस्तूरिकावलिं कुरु । कीदृशेन करेण । चन्दनशिशिरतरेण चन्दनादपि शीतलेन । कीदृशे पयोधरे । मनोभवस्य कामस्य यो मङ्गलकलशो माङ्गल्याय स्थापितः पूर्णकुम्भस्तस्य सहोदरे सदृशे ॥ १ ॥ **अलिकुलेति** । हे प्रिय, लोचने नेत्रे त्वदधराभ्यां यच्चुम्बनं तेन लम्बितं गलितं यत्कज्जलं तदुज्ज्वलय पुनर्दीपय । नयनयोः कज्जलं पुनरर्पयेत्यर्थः । कीदृशे लोचने । रतिनायकस्य कामस्य सायकान्बाणान्कटाक्षरूपान्मुञ्चतीति रतिनायकसायकमोचनं तस्मिन् । कीदृशं कज्जलम् । अलिकुलस्य भ्रमरसमूहस्य यद्गञ्जनं तिरस्कार-

---

१ 'गञ्जनसंजनकं' इति पाठः । २ 'कज्जलमुज्ज्वलय' इति पाठः ।

नयनकुरङ्गतरङ्गविकासनिरासकरे श्रुतिमण्डले ।
मनसिजपाशविलासधरे शुभवेश निवेशय कुण्डले । निज० ॥ ३ ॥
भ्रमरचयं रचयन्तमुपरि रुचिरं सुचिरं मम संमुखे ।
जितकमले विमले परिकर्मय नर्मजनकमलकं मुखे । निज० ॥४॥
मृगमदरसवलितं ललितं कुरु तिलकमलिकरजनीकरे ।
विहितकलङ्ककलं कमलानन विश्रमितश्रमशीकरे । निज० ॥ ५ ॥

---

अपि च । **नयनेति** । शुभो वेशो नेपथ्यविशेषो यस्येति हे शुभवेश, श्रुतिमण्डले कुण्डले निवेशय । किंभूते श्रुतिमण्डले । नयनयोस्तरङ्गा निरीक्षणविशेषा वृद्ध्युपचयास्त एव कुरङ्गविलासास्तेषां निरासं करोतीति । पुनः किंभूते । मनसिजस्य युवमनोबन्धनार्थं पाशशोभाधृति । अनेन नेत्रयोः श्रुतिगामिता उक्ता ॥३॥ अपि च । **भ्रमरचयमिति** । हे यदुनन्दनेत्यनुषञ्जनीयम् । मम मुखेऽलकं परिकर्मय अलकानां प्रसाधनं कुरु । किंविशिष्टे मुखे । जितकमले पद्मसदृशे । पुनः किंभूते । विमले । पुनः किंभूते । प्रसादवति । किंभूतमलकम् । नर्मपरिहासवचनजनकम् । अलकभ्रमरपङ्क्त्या मुखं पद्ममित्युत्प्रेक्षितम् । इति उत्प्रेक्षालंकारः ॥४॥ अपि च—**मृगमदेति** । हे कमलवदन, मम अलिकरजनीकरे ललाटचन्द्रमसि ललितं मनोहरं तिलकं कुरु । किंभूतं तिलकम् । कस्तूरिकारसेन संभक्तम् । किंभूतम् । विहिता आरोपिता कलङ्कस्य कला येन । एतेन

---

स्तस्य जनकम् । 'उज्ज्वलो दीप्तिशृङ्गारविशदेषु विकाशिनि ।' इति विश्वः ॥ २ ॥ **नयनकुरङ्गेति** । हे शुभवेश । शुभः शोभनो वेशोऽलंकरणं यस्य तादृशम् । मम श्रुतिमण्डले कर्णप्रदेशे कुण्डले विनिवेशय अर्पय । कीदृशे श्रुतिमण्डले । नयने एव यौ कुरङ्गौ मृगौ । अतिवेगवत्त्वात् । तयोस्तरङ्गस्य यो विकासः प्रसरणं तस्य निरासकरे निरासकारिणि नयनयोर्दैर्घ्यवियोगकारिणि । अन्यथा कियद्दूरं तयोर्वृद्धिः स्यादित्यर्थः । पुनः कीदृशे । श्रुतिमण्डले । मनसिजस्य कामस्य यः पाशोऽस्त्रविशेषस्तस्य विलासधरे तल्लीलाभृति ॥ ३ ॥ **भ्रमरचयमिति** । मम संमुखं मुखे रुचिरं मनोहरमलकं चूर्णकुन्तलं परिकर्मय भूषय । कीदृशमलकम् । नर्मजनकम् । कीदृशे मुखे । विमले निर्मले । पुनः कीदृशे । जितकमले जितं तिरस्कृतं निजशोभया कमलं येन तादृशे । कीदृशमलकम् । सुचिरं चिरादुपरि मुखस्योपरि भ्रमरचयं भ्रमरसमूहं रचयन्तम् । स्वकान्त्या भ्रमरभ्रमं जनयन्तमित्यर्थः ॥ ४ ॥ **मृगमदेति** । हे कमलनयन पद्ममुख, अलिकरजनीकरे अलिकं ललाटमेव रजनीकरश्चन्द्रस्तस्मिन् । तिलकं कुरु । कीदृशं तिलकम् । मृगमदरसवलितं मृगमदरसेन कस्तूरीरसेन वलितं निर्मितम् । पुनः कीदृशं तिलकम् । विहितकलङ्ककलम् । विहिता कलङ्कस्य लाञ्छनस्य कला शोभा येन तत्तादृशम् । अत्र कमलाननेति विशेषणेन आननरूपकमलविरोधिन्यलिकरूपरजनीकरे मृगमदतिलकच्छलेन कलङ्कादानमुचितमेवेति ध्वनितम् । कीदृशे अलिके । विश्रमितश्रमशीकरे विश्रमितो विश्रामं प्रापितो यः श्रमस्तज्जनितः शीकरोऽम्बुकणो यत्र तादृशेऽलिके ॥ अत्र विश्रमितेत्यनेन

मम रुचिरे चिकुरे कुरु मानद मनसिजध्वजचामरे ।
रतिगलिते ललिते कुसुमानि शिखण्डिशिखण्डकडामरे । निज० ६

सरसघने जघने मम शम्बरदारणवारणकन्दरे ।
मणिरशनावसनाभरणानि शुभाशय वासय सुन्दरे । निज० ॥७॥

श्रीजयदेववचसि रुचिरे हृदयं सदयं कुरुमण्डने ।
हरिचरणस्मरणामृतनिर्मितकलिकलुषज्वरखण्डने । निज० ॥८॥

---

अलिकमष्टमीचन्द्रेणोपमीयते, कस्तूरीविशेषकं कलङ्केनेत्युपमालंकारः । किंभूते मुखे । विश्रमिताः शान्तिमिताः श्रमजलकणा यत्र । एतेन पुनरुद्दीपनविभावाः सूचिता भवन्तीति ॥५॥ अपि च **मम रुचिर इति** । हे मानद मानिनीमानखण्डन, अथ च हे पूजाप्रद, मम चिकुरे कुसुमानि कुरु । किंभूते चिकुरे । रुचिरे रुचिप्रदे । पुनः किंभूते । मनसिजः कामस्तस्य ध्वजः तत्र चामरवच्चामरस्तस्मिन् । पुनः किंभूते । संभोगेन लुलिते विशकले । पुनः किंभूते । मनोहरे । पुनः किंभूते । शिखण्डिनो मयूरस्य शिखण्डकं बर्हसारः तस्य डामरे भयदे । जेतरीत्यर्थः । रासकच्छन्दः ॥६॥ अपि च **सरसघन इति** । हे शुभाशय शोभनहृदय, अथ शुभ आ सामस्त्येन शयः करो यस्य । मणिरशनादीनां करसाध्यत्वादयमर्थो युक्तः । मम जघने श्रोण्यां मणिमया रशना च वसनानि च आभरणानि च वासय निवेशय । किंविशिष्टे जघने । सरसं च तद्घनं च स्निग्धसान्द्रे । पुनः किंविशिष्टे । शम्बरदारणः कामः स वारण इव तस्य निवासार्थकन्दर इव कन्दरे । पुनः कीदृशे । सुन्दरे मनोहरे । गजगतीत्यादि । अनुकूलो नायकः । प्रगल्भा नायिका । संभोगः शृङ्गारः ॥ ७ ॥ अपि च । **श्रीजयदेवेति** । हे यदुनन्दन, मण्डन इति मण्डननिमित्तं हृदयं सदयं कुरु दयापरो भूत्वा मण्डनानि विधेहीत्यर्थः । किंलक्षणे मण्डने । रुचिरे जयदेवपत्नीसकाशादु-

---

व्यजनवातादिभिस्तनुभूतानां प्रस्वेदबिन्दूनामतिशयिततया हिमकणत्वमाक्षिप्यते । तेन चालिकस्य चन्द्रत्वरूपणं साङ्गं निर्वहतीति ध्वनितम् । 'ललाटमलिकं गोधिः' इत्यमरः ॥ ५ ॥ **ममेति** । हे मानद, मादृशप्रपन्ननायिकाभिमानप्रद । मम रुचिरे मनोहरे चिकुरे केशे कुसुमानि कुरु रचय । कीदृशे चिकुरे । ललिते मनोहरे मनसिजस्य कामस्य ध्वजचामरे पताकाचिह्नभूते चामरे । पुनः कीदृशे । रतिगलिते रतौ सुरतसमये गलिते मुक्तबन्धने । पुनः कीदृशे । शिखण्डिनां मयूराणां शिखण्डस्य पिच्छस्येव डामरे तादृशे ॥ ६ ॥ **सरसेति** । हे शुभाशय शोभनहृदय, मम सुन्दरे जघने मणिमयी या रशना क्षुद्रघण्टिका वसनं वस्त्रमाभरणान्यलंकरणानि च वासय परिधेहि । कीदृशे जघने । सरसघने सरसे शृङ्गाररससहिते घने निबिडे । पुनः कीदृशे । शम्बरं शम्बरनामानं दैत्यं दारयतीति शम्बरदारणः कामः स एव वारणो हस्ती । महाबलत्वात् । तस्य कन्दरे । अपरोऽपि हस्ती पर्वतकन्दरायां तिष्ठतीति भावः । 'कुञ्जरो वारणः करी' इत्यमरः । 'दरी तु कन्दरो वा स्त्री' इति च । वासयेति च 'वस आच्छादने' ण्यन्तः ॥ ७ ॥ **श्रीजयदेवेति** । हे देव कृष्ण, जय सर्वोत्कर्षेण वर्तस्व । अथ जयदेवस्य

रचय कुचयोः पत्रं चित्रं कुरुष्व कपोलयो-
घंटय जघने काञ्चीं मुग्धस्रजा कबरीभरम्[1] ।
कलय वलयश्रेणीं पाणौ पदे मणिनूपुरा-
विति[2] निगदितः प्रीतः पीताम्बरोऽपि तथाकरोत्[3] ॥ ९ ॥

---

त्कर्षप्रदे । पुनः किंलक्षणे । श्रीजयदेववचसि विषयभूते । अथवा चशब्दमध्याहृत्य मण्डने जयदेववचसि च हृदयं सदयं कुर्विति व्याख्येयम् । अन्यानि पदानि उभयविशेषणत्वेन योजनीयानि । किंलक्षणे वचसि । सहृदयालंकरणे । जयदेववचसि किंविशिष्टे । उसः···तस्मिन् । हरिचरणस्मरणमेवामृतं तत्र कृतो यः कलिकलुषज्वरो रोषरूपसंतापः स एव संज्वरः तस्य खण्डने । हरिचरणस्मरणामृतेन पापखण्डने वचसीत्यर्थः । अथवा हरिचरणस्मरणामृतेन कृतं पापस्य खण्डनं येन वचसा तस्मिंस्तादृशे ॥ ८ ॥ इदानीमष्टपद्युक्तमेव श्लोकेनावतारयति—**रचयेति** । पीताम्बरः श्रीकृष्ण इति राधया निगदितः प्रीतः सन्यथा निगदितं तथा सर्वमकरोत् । अपिशब्दसमुच्चितं यद्यत्तदभीष्टं तत्तदकरोदित्यपिशब्दार्थः । इतीति किम् । हे यदुनन्दनेत्यनुषङ्गः । कुचयोः पत्रं पत्रवल्लीं रचय । अनु च कपोलयोर्मकरिकादि चित्रं रचय । जघने श्रोण्यां मेखलामारोपय । अनु च मुग्धस्रजा मनोहरमालया कबरीभरं कलय बन्धय । अनु च वलयश्रेणीं पाणौ कलय । अनु च पदे मणिमयनूपुरौ कलय । अत्र यथासंख्यमलंकारः । हरिणीवृत्तम् । प्रगल्भा नायिका । तल्लक्षणम्—'लब्ध्वा पतिं प्रगल्भा स्यात्समस्तरतकोविदा । आक्रान्तनायका बाढं विराजद्विभ्रमा यथा ॥ स्वामिन्भङ्गुरयालकं सतिलकं भालं विलासिन्कुरु प्राणेश त्रुटितं पयोधरयुगे हारं पुनर्योजय । इत्युक्त्वा सुरतावसानसुखिता संपूर्णचन्द्रानना स्पृष्टा तेन तथैव जातपुलका प्राप्ता पुनर्मोहनम् ॥' दक्षिणो नायकः । 'यो

---

कवेर्वचसि वाक्ये सदयं दयासहितं यथा स्यादेवं हृदयं कुरु । कीदृशे मण्डने । जयदेवस्यालंकारजनके । पुनः कीदृशे । हरिचरणस्मरणमेव यदमृतं तेन निर्मितं कलिकलुषज्वरस्य कलियुगसंचितपापरूपज्वरस्य खण्डनं नाशनं येन तादृशे ॥ ८ ॥ **रचयेति** । हे कृष्ण, कुचयोः पत्रं मकरिकापत्रं रचय । कपोलयोश्चित्रं चित्रकाख्यं विशेषं कुरु । अथ जघने काञ्चीं त्रुटितां क्षुद्रघण्टिकां घटय अर्पय । कबरीभरे चिकुरसमूहे स्रजं माल्यमञ्चय प्रापय । वलयश्रेणीं कङ्कणपङ्क्तिं पाणौ हस्ते कलय अर्पय । पदे चरणे नूपुरौ मञ्जीरौ कुरु । इत्यनेन प्रकारेण राधया निगदित उक्तः सन्पीताम्बरः कृष्णोऽपि

---

१ 'काञ्चीमञ्च स्रजा' इति पाठः । २ 'पदे कुरु नूपुरा—' इति पाठः । ३ अस्याग्रे क्वचित्पुस्तके निम्नलिखितः श्लोकः समुपलभ्यते—

पर्यङ्कीकृतनागनायकफणाश्रेणीमणीनां गणे
संक्रान्तप्रतिबिम्बसंवलनया बिभ्रद्विभुप्रक्रियाम् ।
पादाम्भोरुहधारिवारिधिसुतामक्ष्णां दिदृक्षुः शतैः
कायव्यूहमिवाचरन्नुपचितीभूतो हरिः पातु वः ॥

यद्गान्धर्वकलासु कौशलमनुध्यानं च यद्वैष्णवं
यच्छृङ्गारविवेकतत्त्वरचनाकाव्येषु लीलायितम् ।
तत्सर्वं जयदेवपण्डितकवेः कृष्णैकतानात्मनः
सानन्दाः परिशोधयन्तु सुधियः श्रीगीतगोविन्दतः ॥१०॥
श्रीभोजदेवप्रभवस्य रामादेवीसुतश्रीजयदेवकस्य ।
पराशरादिप्रियवर्गकण्ठे श्रीगीतगोविन्दकवित्वमस्तु ॥ ११ ॥

---

गौरवं भयं प्रेम दाक्षिण्यं पूर्वयोषिति । न मुञ्चत्यन्यरक्तोऽपि ज्ञेयोऽसौ दक्षिणो यथा' ॥ ९ ॥ इदानीं विद्वत्प्रार्थनाव्याजेन आत्मप्रशंसां तनुते—**यद्गान्धर्वेति** । हे सुधियः, जयदेवपण्डितकवेस्तत्सर्वं गीतगोविन्दतः । अत्र तसिल् सार्वविभक्तिकत्वात्सप्तम्यर्थे उपपत्तिः । गीतगोविन्दे परिशोधयन्तु शुद्धं कुर्वन्तु । अथवा गीतगोविन्दादेव शुद्धं जानन्तु । अत्र 'यद्यपि संख्यावान्पण्डितः कविः' इति एकार्थपर्यवसायित्वं तथापि 'विकर्तनस्तमसाम्' इत्यादिवत्पण्डितेष्वपि कविः क्रान्तदर्शीति विशेषणपरं बोद्धव्यम् । तदिति किम् । यद्गान्धर्वकलासु कौशलम् । गान्धर्वो मार्गदेशीवत् तस्य कला अङ्गविन्यासवैचक्षण्यादिकाः तत्र कौशलम् । तत्र गान्धर्वस्य स्वपदात्मकत्वेन मार्गकलात् (?) । अत्र संभवित्वेऽपि केवलदेश्यां गन्धर्वशब्दवृत्तिरुपचारवृत्त्या बोद्धव्येति सुस्थितम् । अनु च यच्च वैष्णवमनुध्यानम् । अनु च चिन्तनम् । अनु च यच्च शृङ्गारस्य विवेकः संभोगविप्रलम्भत्वेन पृथग्भावस्तस्य तत्त्वं सम्यक्त्वेन निरूपणम् । तस्य रचनाविशेषवन्ति यानि काव्यानि तेषु यल्लीलायितं विलसितमिति यावत् । एतावता गाने विष्णुभक्तौ शृङ्गाररसनिरूपणे च यदेतस्य काव्यकौशलं तत्सानन्दाः सुधियोऽस्मादेव प्रबन्धात्परिशोधयन्तु । किंभूतस्य कवेः । कृष्णे एकतान एकाग्रचित्त आत्मा स्वरूपं यस्य । तथाविधस्येत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । वैदर्भी रीतिः । आरभटी वृत्तिः ॥ १० ॥
( अत्र '**श्रीभोजदेवेति**' श्लोकस्य टीका नोपलब्धा टीकादर्शपुस्तके ) ॥ ११ ॥

---

तथैवाकरोत् । यथा यथा राधोक्तवती तथैवाकरोदित्यर्थः ॥ ९ ॥ **यद्गान्धर्वेति** । हे सुधियः पण्डिताः सन्तो जयदेवकवेः श्रीगीतगोविन्दतस्तत्सर्वं परिशोधयन्तु जानन्तु । तत्किमित्याह—यद्गान्धर्वकलासु कौशल्यं नैपुण्यम् । अथ च वैष्णवं विष्णुसंबन्धि यदनुध्यानमनुक्षणचिन्तनम् । यच्च शृङ्गारविवेकतत्त्वं शृङ्गारस्य शृङ्गाररसस्य यो विवेकः संयोगविप्रलम्भादिरूपेण यद्विवेचनं तस्य भावं यथार्थज्ञानम् । यदपि च काव्येषु कविकर्मसु कवित्वनिर्माणरूपेषु लीलायितम् । तत्सर्वमित्यर्थः । कीदृशस्य जयदेवकवेः । कृष्णैकतानात्मनः कृष्णैकतानस्तत्पर आत्मा मनो यस्य तादृशस्य । 'एकतानोऽनन्यवृत्तिः' ॥ १० ॥ अधुना पितृमातृनाम निबध्नन्प्रार्थयते सज्जनानिति स्वगुणान्प्रकाशयितुम्—**श्रीभोजदेवेत्यादि** ॥ ११ ॥

---

१ 'तत्त्वमपि यत्काव्येषु' इति पाठः । २ 'रामादेवी' इति पाठः ।

साध्वी माध्वीकचिन्ता न भवति भवतः शर्करे कर्कशासि
द्राक्षे द्रक्ष्यन्ति के त्वाममृत मृतमसि क्षीर नीरं रसस्ते ।
माकन्द क्रन्द कान्ताधर धर न तुलां गच्छ यच्छन्ति भावं
यावच्छृङ्गारसारं शुभमिव जयदेवस्य वैदग्ध्यवाचः ॥ १२ ॥

---

इदानीं कविरात्मनः प्रबन्धस्य माधुर्यादिगुणवत्त्वं ख्यापयति—साध्वीति। जयदेवस्य वैदग्ध्यवाचः शुभमिव शुभवत्। यावत्सारं यावत्सारस्य संभव इति यावत्सारम्। यत्र कुत्रापि सारं विद्यते तत्र शृङ्गाररसस्य सारं तत्त्वं ज्ञातुमिच्छति। यथा यत्रकुत्रचिच्छुभं मङ्गलं विद्यते तत्र जगन्मङ्गलचरितानुवर्णनाद्यथा गन्तुमिच्छन्ति तथाह। तर्हि हे माध्वीक, तवेयं चिन्ता साध्वी न भवति। एतत्सदृशं भवामीति चिन्ता न कार्या। कथम्। त्वयि तथासाराभावात्। तदा भवतु इति पाठान्तरम्। अथ भवतीति पाठपक्षे—हे शर्करे, भवती कर्कशासीति योज्यम्। तद्गवेषणं योग्यं (?) त्वयि सारं नास्त्येव। हे द्राक्षे, त्वं मा भैः। त्वां के वा द्रक्ष्यन्ति। न केऽपीत्यर्थः। हे अमृत, त्वया नाम्नाऽनेन गर्वो न धार्यः। तदपेक्षया त्वं मृतमसि। हे क्षीररस, रसोऽहमिति त्वं मा गर्वीः। तव रसो नीरमेव। नितरामीर्यते प्रेर्यत इति नीरम्। हे माकन्द पक्वसरसफल, त्वं क्रन्द वैकल्यं प्राप्नुहीति किम्। विकलस्य चिन्तामपि ते न करिष्यन्ति। हे कान्ताधर, त्वं ताभिस्तुलां न धर। अहं त्वत्तुल्यो भवामीति मा संप्रतिपद्येथाः। अथ हे कान्ताधर, वैकल्यं न गच्छेत्यर्थः। यतो जयदेवस्य वैदग्ध्यवाचो यावत्सारं यावद्भिः सारैः सह तुलां गन्तुमिच्छन्ति। तर्हि यावता न तुलयन्ति तावद्भवद्भिरेवमुक्तप्रकारेण स्थातव्यम्। किंभूता वाचः। शुभं मङ्गलं शृङ्गारसारमिव। अत्र 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते' इति न्यायमाश्रित्य प्रबन्धान्ते शुभशब्दोपादानम्। अत्र तिरस्कृतोपमालंकारः। स्रग्धरा वृत्तम्। आरभटी वृत्तिः। वैदर्भी रीतिः। गुणकीर्तनं नाम नाट्यालंकारः। तल्लक्षणं सङ्गीतराजे—'बहूनां गुणिनां यत्र नामार्थजनितैर्गुणैः। एकोऽपदि-

---

एतत्काव्यविवेचनप्रणयिनां यत्संशयोन्मूलना-
त्पुण्यं यच्च हरिस्मृतौ प्रतिपद्व्याख्यासु मे संचितम्।
तेन प्रीतमनास्तनोतु सततं श्रेयो मम श्रीपतिः
शश्वन्मङ्गलमातनोत्वपि सतां संलापतां शृण्वताम् ॥

इति श्रीमहामहोपाध्यायदिनेश्वरमिश्रात्मजश्रीमहामहोपाध्यायशंकरमिश्रविरचितायां श्रीशालिनाथकारितायां गीतगोविन्दटीकायां रसमञ्जरीसमाख्यायां द्वादशः सर्गः समाप्तिं प्रकाश ॥

---

१ 'न भवतु भवती शर्करे' इति पाठः। २ 'कान्ताधर धरणितलं गच्छ' इति पाठः। ३ 'सारस्वतमिह जय' इति पाठः। ४ 'देवस्य विष्वग्वचांसि' इति पाठः।

इत्थं केलितनीर्विहृत्य यमुनाकूले समं राधया
तद्रोमावलिमौक्तिकावलियुगे वेणीभ्रमं बिभ्रति ।
तत्राह्लादिकुचप्रयागफलयोर्लिप्सावतोर्हस्तयो-
र्व्यापाराः पुरुषोत्तमस्य ददतु स्फीतां मुदां संपदम् ॥ १३ ॥

इति श्रीजयदेवकृतौ गीतगोविन्दे सुप्रीतपीताम्बरो नाम द्वादशः सर्गः ॥

समाप्तं चेदं काव्यम् ॥

---

श्यते तत्तु कीर्तितं गुणकीर्तनम् ॥ १२ ॥ इत्थमिति । पुरुषोत्तमस्य हस्तयोर्व्यापाराः स्फीतां मुदां संपदं ददतु । किंविशिष्टयोर्हस्तयोः । तत्र वेण्यामाह्लादो विधत्ते ययोस्ते आह्लादिनी । कुचावेव प्रयागफले वटफले । आह्लादिनी च ते कुचप्रयागफले च आह्लादिकुचप्रयागफले । तयोर्लिप्सां वाञ्छां बिभ्रत इति लिप्साभृतौ । तयोर्लिप्साभृतोः । किं कृत्वा । इत्थं पूर्वोक्तप्रकारेण स्वाधीनभर्तृकया राधया सह यमुनाकूले क्रीडापरंपरा-विहृत्येति स्वेच्छया विधानपरम् । क्व सति । तद्रोमावलिमौक्तिकावलियुगे । तस्या रोमावलिमौक्तिकानामावलिर्हारः तयोर्युग्मे । वेण्या इति गङ्गायमुनयोः सङ्गमस्य भ्रमं विलासं बिभ्रति सति रोमावलिर्यमुनयोपमीयते कृष्णत्वात् । मौक्तिकावलिश्चो-ज्ज्वलत्वाद्गङ्गयोपमीयते । तत्संगमे प्रयागो भवत्येव । कुचौ तत्फलाभ्यामुपमीयेते । कुचप्राप्तेः प्रयागफलप्राप्तिरिति रूपकमलंकारः । शार्दूलविक्रीडितं वृत्तम् । स्वाधीन-भर्तृका नायिका । तल्लक्षणम्—'यस्या रतिगुणाकृष्टः पतिः पार्श्वं न मुञ्चति । विचित्रविभ्रमासक्ता सा स्वाधीनपतिर्यथा ॥ लिखति कुचयोः पत्रं कण्ठे नियोजयति स्रजं तिलकमलिके कुर्वन्गण्डादुदस्यति कुन्तलान् । इति चटुशतैर्वारंवारं वपुः परितः स्पृशन् विरहविधुरो नास्याः पार्श्वं विमुञ्चति वल्लभः ॥' पाञ्चाली रीतिः । भारती वृत्तिः । पाञ्चाली गीतिः । आदितालस्तथा पञ्च इरवकसमुद्भवाः । प्रतिमण्ठश्चतुर्मात्रो मण्ठ-श्चैवाहुतालकः ॥ तालो वर्णयतिश्चैव जयमङ्गलसंज्ञितः । विजयानन्दनामा च जय-श्रीसंज्ञकः परः ॥ प्रतितालं पदानि स्युः पाटास्तदुभयं तथा । मध्ये मध्ये यथाशो-भालिप्तयुक्तिर्विशेषवत् । विशेषतो वर्णयतौ यदा श्रीसंज्ञिकोऽपि च ॥ तेनकाः स्युः पदस्थाने प्रतितालेन वेश्यते । मुक्तिपादाक्षरैर्युक्तैरालापेन पुरस्कृतैः ॥ पदान्येवं षोडश वै ताला एकोनविंशतिः । गौडः स्यादेषतालादिरागः सर्वपदाश्रयः ॥ धीरो-दात्तगुणैर्युक्तो वर्ण्य उत्तमनायकः । छन्दः स्यात्स्वेच्छया बद्धं समानादिगुणा इमाः' ॥ १३ ॥ इति श्रीसुप्रीतपीताम्बरतालश्रेणिनामा अष्टाविंशः प्रबन्धः ॥

यस्य द्वादशराजकं वितनुते सेवां स्थितं किंकरे
यस्मिन्द्वादशभानुभानुनिकरो भालेककालोद्भुतः ।
यश्च द्वादशमाःप्रभः प्रकृतिषद्व्याप्यैव लोभं स्थितः
सोऽयं द्वादशसर्गगं विवरणं श्रीकुम्भकर्णो व्यधात् ॥

---

१ अयं श्लोकः प्रक्षिप्त इति भाति । आदर्शपुस्तकान्तरेष्वदर्शनात् ।

पदवाक्यप्रमाणाख्यत्रिसरित्सङ्गमप्रिया ।
कुम्भकर्णगिरां योगो न स्यादिष्टार्थदः कथम् ॥
स्वभावगम्भीरतया निसर्गदुर्बोधभावा जयदेववाचः ।
व्याकर्तुमीष्टे यदि ता नरेशः श्रीकुम्भकर्णो न परः कदाचित् ॥
श्रीगीतगोविन्दविचारसूक्तिसुरापगासंभवतोऽनुमेयम् ।
श्रीकुम्भकर्णेऽखिलराजिभूभृद्राजत्वमार्या अविचार्यमस्ति ॥
रे मूढाः किमुपास्यते गुणिगणप्रावीण्यपाटच्चरं
सूक्तवृन्दमनेककष्टकरकनाचातुर्यचाटूक्तिभिः ।
श्रीकुम्भः सकलाभिलाषफलदश्चेत्सेवितुं प्राप्यते
सौरभ्यं यदि मौक्तिके किमपरं श्लाघ्यं भवेद्भूतले ॥
सुवर्णमुक्ताफलनिर्मितेयं सत्सूक्तिमाला सुमनःप्रयुक्ता ।
श्रीकुम्भभूमीपतिनोपयुक्ता श्रीवासुदेवार्पणमस्तु साक्षात् ॥
नाभूवन्कति नाम केऽपि सुधियस्तत्तद्गुरूपासना-
भ्यासासादिततत्त्वतोषजननप्रोल्लासिवाग्विभ्रमाः ।
स्वच्छन्दप्रसरद्वचःसुरसरित्कल्लोललोलोक्तिभिः
स्वाधीनीकृतसर्वतः सहृदयः श्रीकुम्भ एव प्रभुः ॥

इति श्रीसरस्वतीरससमुद्भूतकैरवोद्याननायकेनाभिनवभरताचार्येण मालवाम्भोधिनाथमहीधरेण यवनवरतिमिरकुलसङ्कुलसरस्पुरजलधिजलैकचुलुकेन मुनिवरेण प्रागुदक्प्रतीचीदिगाधिपराजगजहठादानदर्शितानन्यसाधारणपौरुषेण मेदपाटसमुद्दम्भमरोहिणीरमणेन रायगुरुचापगुरुसेलगुरुणामां च परमगुरुवशालगारायां (?) चामुण्डवनेत्यादिनिखिलराजिविराजमानेन अरिराजमत्तमातङ्गपञ्चाननेन सङ्गीतमीमांसासाम्राज्यविता प्रत्यर्थिपृथ्वीपतितिमिरततिनिराकरणप्रौढप्रतापमार्तण्डेन वैरिवनिताबैधव्यदीक्षाप्रदानगुरुणा बलोद्धतराजकदम्बकदम्बोत्पाटनदक्षिणेन बलहीनराजकस्थापनाचार्येण भूमण्डलाखण्डलेन चित्रकूटविभ्रमाभ्युच्छ्नरेश्वरेण गजनरतुरगपतीश्वराजत्रितयतोडरमल्लेन वेदमार्गस्थापनचतुराननेन याचककल्पनाकल्पद्रुमेण वसुंधरोद्धरणादिवराहेण भवानीपतिप्रसादपरिप्राप्तहृष्टशरीरशालिना ऋणत्रयापाकरणकारणसकलतीर्थाधिदैवतगयागतयवननिगडनिर्वासनेन त्रिजगतीतापत्रयोन्मूलनमूलहेतुना महेन्द्रमुखाभिनेयगताभिनयप्रपञ्चरचनाकरतलकलितामन्त्यकफलवदविकलपवीकृतविश्वासुवस्तुना वसुमतीमण्डलमध्यवर्तिनापोपकारतोडरमल्लेन नादेनेव मूर्तिमता सूर्यत्रितयवेदितराजचक्रचूडामणिना महाराज्ञीहृदयसौभाग्यदेवीहृदयनन्दनेन महाराजराणश्रीमोकयोर्विदटीलेन्द्रतनुजन्मना महाराज्ञीश्रीअपूर्वदेवीहृदयाधिनाथेन महाराजाधिराजमहाराजश्रीकुम्भकर्णमहीमहेन्द्रेण विरचितायां रसिकप्रियानाम्न्यां श्रीगीतगोविन्दटीकायां द्वादशः सर्गः समाप्तः ॥

---

## गङ्गास्तवप्रबन्धः[1] ।

मधुमथनमूर्तिवर इन्दुकरकामुकं वहसि बहु वारि सुधवळे ।
हरिचरणनखभिदुरजगदण्डनिर्गता ब्रह्मजलपात्रकृतसङ्गे ॥ १ ॥
नमो देवि गङ्गे नमो देवि गङ्गे हर निखिलमघमलकनन्दे ॥ ध्रुवम् ॥
त्वमसि जनपाविनी चतुरुदधिगामिनी सप्तर्षिकुलसुकृतसारे ।
कनकगिरिलङ्घिते सकलमुनिवन्दिते हरमुकुटसितकुसुममाले ॥ न० २
सगरसुतसङ्गमे लसदमरसुन्दरीदूतिके दुष्कृतिदुरापे ।
निरयगतिबाधके निर्वाणसाधके भक्तजनहृतसंतापे ॥ नमो० ॥ ३ ॥

---

मधुमथनेति । हे देवि, हे गङ्गे, तुभ्यं नमः । आदरे द्विरुक्तिः । हे अलकनन्दे, त्वं निखिलं समग्रमघं पातकं हर नाशय । मधुमथनस्य श्रीकृष्णस्य या मूर्तयस्तासां वरा श्रेष्ठा तस्याः संबुद्धौ हे मधुमथनमूर्तिवरे, त्वं बहुवारि अतिजलं वहसि । सुष्ठु धवलमाकारो यस्यास्तस्याः संबुद्धौ । हे ब्रह्मजलपात्रकृतसङ्गे, त्वं हरिचरणनखैर्भिदुरं भिन्नं यज्जगतोऽण्डं ब्रह्माण्डं तस्मान्निर्गतासि प्रकटितासि ॥ १ ॥ त्वमसीति । हे सप्तर्षिकुलस्य सुकृतं पुण्यं तस्य सारे सारभूते । कनकगिरिर्मेरुर्लङ्घित उल्लङ्घितो यया तस्याः संबुद्धौ हे कनकगिरिलङ्घिते, हे सकलैः समस्तैर्मुनिभिर्वन्दिते । हे हरमुकुटस्य सितकुसुमानां श्वेतपुष्पाणां माले मालाभूते । त्वं जनानां विश्वेषां पावनी पवित्रकर्त्री असि । पुनः कीदृशी । चत्वारश्च ते उदधयश्च तान्प्रति गच्छति सा चतुरुदधिगामिनी असि ॥ २ ॥ सगरेति । हे सगरसुतसङ्गमे सगरसुतानां सङ्गमो यस्यास्तस्याः संबुद्धौ । सङ्गमेन पावनकर्त्रीत्यर्थः । हे लसन्त्यः शोभमाना या अमरसुन्दर्यो देवाङ्गनास्तासां दूतिके प्रापिके । हे दुष्कृतिभिर्दुष्कर्मकारिभिर्दुःखेनाप्युमशक्ये । हे निरयगतिबाधके नरकगतिनिवारके । हे निर्वाणसाधके मोक्षदे । हे भक्तजनहृतसंतापे, भक्तजनानां हृतः संतापो यया तस्याः संबुद्धिः ॥ ३ ॥

---

१ यद्यप्यस्य प्रबन्धस्य 'भणतमिह सादरं श्रीजयदेवकविसुन्दरयसि' इत्यान्तिमपद्येन गीतगोविन्दकर्तृजयदेवकविप्रणीतत्वमापाततस्समर्थ्यते, तथापि गीतगोविन्दस्याखिलजनसाधारणानां पदलालित्य—रचनाचातुरी—कल्पनाचमत्कार—वर्णनानैपुण्यादीनां—जयदेवकृतित्वज्ञापकानामत्र लेशतोऽप्यनभिगमादयं प्रबन्धो गीतगोविन्दकर्तुः श्रीजयदेवस्य कृतिरिति बलीयोऽनुमानं विजृम्भतेतराम् । अतोऽस्य प्रबन्धस्य प्रणेता [illegible] जयदेवाद्भिन्नो श्रीजयदेवनामा अन्यः कोऽपि कविः स्यादिति निष्कर्षः ।

अस्य च प्रबन्धस्य हस्तलिखितं द्विपत्रात्मकं सटीकं पुस्तकमेकमस्मत्सुहृद्भिः [illegible] 'बी. ए.' इत्युपपदधारिभिः 'तनसुखराम मनसुखराम त्रिपाठी' इत्येतैः [illegible] प्रेषितम् । [illegible] कोऽप्यन्यः [illegible] प्रबन्धो रसिकजनप्रीतये [illegible] नीत इत्यलं विस्तरेण ॥

तीर्थवरकारिणी पूर्वजोद्धारिणी हिमशैलपाषाणभेदे ।
नागरं प्लावयसि पूरयसि सागरं संगता विन्ध्यगिरिपादे ॥नमो०॥४॥
शुभसलिलनिर्धौतपुलिनवति कुर्वतस्तव नामनिर्मलालापम् ।
वन्दिता वीक्षिता चिन्तितावगाहिता मज्जिता मम हरसि पापम् ॥न०५
इह निखिलमुनिगणैरिह निखिलसुरगणैरिह निखिलवेदैरुदारे ।
पीयसे गीयसे स्तूयसे जह्नुमुनिकन्यके संसारसारे ॥ न० ॥ ६ ॥
गण्डूषमिह मेऽघशतमधिजयतु तव करनिकरगम्भीरतोये ।
परलोकबन्धुरसि सुन्दरसिन्धुरसि तटिनि सुरसदनसाधनोपाये ॥न० ७
इति रामलक्ष्मणकौशिकानुज्ञया सुरसरित्कृतनमस्कारम् ।
भणन्तमिह सादरं धीरजयदेवकवियुत्तारयसि भवजलधिपारम् ॥ न० ८

इति गङ्गास्तवप्रबन्धः समाप्तः ।

---

**तीर्थवरेति** । हे हिमशैलस्य हिमाचलस्य पाषाणानां भेदो भेदनं यस्मात्तस्याः संबुद्धौ त्वं तीर्थवरस्य श्रेष्ठतीर्थस्य कारिणी असि । पुनः कीदृशी । पूर्वजानामुद्धारिण्यसि । हे गङ्गे, त्वं नगराणां समुदायो विद्यते यत्र तन्नागरं भूमण्डलं प्लावयसि पूर्णं करोषि । पुनः कीदृशी । सागरं समुद्रं पूरयसि । पुनः कीदृशी । विन्ध्यगिरिपादे विन्ध्याचलमूले संगता मिलितासि ॥ ४ ॥ **शुभेति** । हे शुभसलिलेन पवित्रोदकेन निर्धौतं क्षालितं यत्पुलिनं तटं तदस्ति यस्यास्तस्याः संबुद्धौ । त्वं मम पापं हरसि नाशयसि । कथंभूतस्य मम । तव नाम्नो यो निर्मलालापः पवित्रालापस्तं कुर्वतः । कथंभूता त्वम् । वन्दिता नमस्कृता वीक्षिता दृष्टा । चिन्तिता स्मृता । अवगाहिता प्रविष्टा । मज्जिता स्नाता सती एभिः प्रकारैः पापं हरसि ॥ ५ ॥ **इहेति** । हे उदारे वदान्ये । हे संसारसारे । संसारे सारभूता त्वमसीत्यर्थः । हे जह्नुमुनिकन्यके हे जाह्नवि, त्वमिह संसारे । अथवा ब्रह्माण्डे निखिलमुनिगणैः समग्रमुनिसमूहैः पीयसे । इह निखिलदेवगणैः समग्रदेवसमूहैः गीयसे । निखिलवेदैः समस्तवेदैः स्तूयसे ॥ ६ ॥ **गण्डूषमिति** । हे करनिकरगम्भीरतोये कराणां लहरीणां निकरः समूहस्तेन गम्भीरमक्षोभ्यं तोयं यस्यास्तस्याः संबुद्धौ हे सुरसदनसाधनोपाये । सुराणां देवानां सदनं स्थानं तस्य साधनं प्राप्तिस्तस्योपायभूते । हे तटिनि तटवति हे गङ्गे, त्वं परलोकबन्धुः परलोके बन्धुरूपासि । पुनः कथंभूतासि । सुन्दराणां देवानां सिन्धुर्नद्यसि । अतस्तव गण्डूषमाचमनं मे मम अघशतं पातकशतमधिजयतु नाशयतु । इहास्मिंल्लोके ॥ ७ ॥ **इति रामेति** । रामलक्ष्मणकौशिकानुज्ञया । कौशिको विश्वामित्रः । रामलक्ष्मणकौशिकानामनुज्ञया आज्ञया । सुरसरितो गङ्गायाः कृतो नमस्कारो यस्यां क्रियायां यथा भवति तथा । सादरमादरपूर्वकं यथा भवति तथा । इति पूर्वोक्तप्रकारेण । इहास्मिंल्लोके भणन्तं कथयन्तं धीरजयदेवकविं भवजलधिपारं भवरूपो यो जलधिः समुद्रस्तस्य पारमन्तमुत्तारयसि प्रापयसीत्यर्थः ॥ ८ ॥ इति श्रीजयदेवकृतगङ्गास्तवप्रबन्धटीका समाप्ता ॥

# गीतगोविन्दस्थपद्यानामनुक्रमणी ।

# विक्रेयाणि संस्कृतनूतनमुद्रितपुस्तकानि ।

## संस्कृत—काव्यग्रन्थ.

| | कि. रु. | आ. | ट. रु. | आ. |
|---|---|---|---|---|
| आर्यासप्तशती—गोवर्धनाचार्यकृत, अनन्तपण्डितकृत व्यङ्ग्यार्थदीपना टीकेसहित. ... ... ... ... | १ | ८ | ० | ४ |
| ऋतुसंहार काव्य—कालिदासकृत, मणिरामकृत टीकेसहित आणि शृङ्गारतिलक काव्य. ... ... | ० | ६ | ० | २ |
| कथाकौतुक—पण्डितश्रीवरविरचित. ... ... | ० | १२ | ० | २ |
| कादम्बरीकथासार काव्य—श्रीमदभिनन्दकृत. ... | ० | ८ | ० | २ |
| किरातार्जुनीय काव्य—भारविकृत, मल्लिनाथकृत घण्टापथटीकेसहित. ... ... ... ... ... | २ | ० | ० | ४ |
| कुमारसंभव काव्य—कालिदासकृत, मल्लिनाथकृत (१–७ सर्ग) व सीतारामकृत (८–१७ सर्ग) संजीविनी टीकेसहित. ... ... ... ... ... ... | १ | ८ | ० | ४ |
| गङ्गावतरण—श्रीनीलकण्ठदीक्षितविरचित. ... ... | ० | ८ | ० | २ |
| गीतगोविन्द—महाकवि श्रीजयदेवविरचित, कुम्भनृपतिप्रणीत रसिकप्रिया व्याख्या व महामहोपाध्याय शंकरविरचित रसमञ्जरी व्याख्या यांसहित. ... ... ... | १ | २ | ० | ६ |
| जयन्तविजय—श्रीमदभयदेवविरचित. ... ... | १ | ० | ० | ३ |
| देलरामाकथासार—राजानकमहाह्लादकृत. ... ... | ० | ६ | ० | २ |
| नीतिशतक—भर्तृहरिकृत, कृष्णशास्त्री महाबळकृत टीकेसहित. ... ... ... ... ... ... | ० | ६ | ० | २ |
| नैषधीयचरित—श्रीहर्षविरचित, नैषधीयप्रकाशाख्य-नारायणीटीकेसहित. ... ... ... | ६ | ० | १ | ० |
| श्रीवेंकटसार्वभौमविरचित व्याख्येसहित. ... ... | ० | ४ | ० | १ |
| बालभारत—श्रीमदमरचन्द्रसूरिविरचित. ... ... | २ | ४ | ० | ८ |
| बृहत्कथामञ्जरी—श्रीक्षेमेन्द्रविरचित. ... ... | २ | १२ | ० | ८ |
| भट्टिकाव्य—भट्टिकृत, जयमङ्गलकृत जयमङ्गला टीकेसहित. | २ | ० | ० | ८ |
| भारतमञ्जरी काव्य—महाकविश्रीक्षेमेन्द्रकृत. ... | ५ | ० | ० | १० |
| मेघदूत काव्य—कालिदासकृत, मल्लिनाथकृत संजीविनी टीकेसह. ... ... ... ... | ० | ८ | ० | २ |
| रघुवंश काव्य—सूक्ष्माक्षर. ... ... ... | १ | ४ | ० | ४ |
| रसिकाष्टक काव्य—नारायणभट्ट पर्वणीकरकृत. ... | ० | १ | ० | १ |
| राघवनैषधीय काव्य-श्रीहरदत्तसूरिकृत, स्वकृत टीकेसहित. | ० | १० | ० | २ |

| | कि. रु. | आ. | ट. रु. | आ. |
|---|---|---|---|---|
| रावणार्जुनीय काव्य—काश्मीरिक श्रीमद्भीमविरचित. | १ | ४ | ० | १ |
| रामायणमञ्जरी—क्षेमेन्द्रविरचित. ... ... | ३ | ४ | ० | ८ |
| राक्षसकाव्य—राक्षसकविकृत. ... ... | ० | १ | ० | १ |
| विष्णुभक्तिकल्पलता काव्य—पुरुषोत्तमविरचित, महीधरविरचित टीकेसहित. ... ... ... | ० | १० | ० | १ |
| विदग्धमुखमण्डन काव्य—धर्मदाससूरिविरचित(सटीक). | ० | ६ | ० | २ |
| वैराग्यशतक—भर्तृहरिकृत, कृष्णशास्त्री महाबलकृत टीकेसह. | ० | ६ | ० | २ |
| शिशुपालवधकाव्य—माघकृत, मल्लिनाथकृत सर्वंकषा टीकेसहित. ... ... ... ... | २ | ८ | ० | ८ |
| शृङ्गारतिलक—महाकवि कालिदासकृत. ... ... | ० | १ | ० | १ |
| शृङ्गारशतक—भर्तृहरिकृत, कृष्णशास्त्री महाबलकृत टीकेसह. | ० | ५ | ० | १ |
| श्रीकण्ठचरितकाव्य—श्रीमङ्खकविकृत, जोनराजकृत टीकेसहित. ह्याचे ५ सर्ग आहेत. ... ... | २ | ८ | ० | ६ |
| समयमातृका काव्य—श्रीक्षेमेन्द्रविरचित. ... | ० | १० | ० | २ |
| सहृदयानन्द काव्य—कृष्णानंदकृत. ह्याचे १५ सर्ग आहेत. | ० | १० | ० | २ |
| साम्बपञ्चाशिका—साम्बकविप्रणीत, क्षेमराजकृत टीकेसह. | ० | ४ | ० | १ |
| सुभाषितत्रिशती—(भर्तृहरिशतकत्रयम्) श्रीरामचन्द्रबुधेन्द्रविरचित सहृदयानन्दिनी व्याख्येसह. ... | १ | ४ | ० | ४ |
| सुरथोत्सव—श्रीसोमेश्वरदेवविरचित. ... ... | ० | १४ | ० | ४ |
| सूक्तिसंग्रह—कविराक्षसकृत. ... ... ... | ० | १ | ० | १ |
| स्तुतिकुसुमाञ्जलि काव्य—श्रीजगद्धरभट्टविरचित, राजानकरत्नकण्ठविरचित टीकेसहित. ... ... | ३ | ० | ० | १० |
| सेतुबन्धमहाकाव्य—श्रीप्रवरसेनविरचित, श्रीरामदासभूपतिप्रणीत टीकेसहित. ... ... ... | ३ | ४ | ० | ८ |
| हरचरितचिन्तामणि काव्य—राजानक-जयरथकृत. | १ | १२ | ० | ६ |
| हरविजयमहाकाव्य—राजानकरत्नाकरविरचित, राजानकालककृत टीकेसहित. ह्याचे ५० सर्ग आहेत. ... | ५ | ० | ० | १२ |
| हरिहरसुभाषित—श्रीहरिहरप्रणीत. हा सुभाषितग्रंथ आहे. | ० | ८ | ० | २ |

निर्णयसागरमुद्रणालयाधिपतिः,

**पाण्डुरङ्ग जावजी.**